प्रतिविरहादपिपुत्रविरहोदुःसहइतिभावेनोक्तमेवविवृणोति वनमिति २१ नन्वेवंतर्हिपुत्रविरहोद्भूतदुःखार्तमनाभगवदुपास्तिमप्यभांक्षीत्किंतत्राह तमेवेति अनेनतस्याउपास्तिप्रकारोदर्शितइ
ति एवकारेणसूचितांविजातीयव्यावृत्तिंस्पष्टयति निस्पृहेति २२ ननुसुतोक्तमन्यदन्यदुपास्तेपुत्रवियोगभ्रांतबुद्धित्वादित्याशंक्याह ध्यायतीति समस्तांचितासर्वावयवचिंताव्यस्तांचिंतै
कैकावयवचिंतातया २३ तस्याउपास्तेःफलमाह भक्तिप्रवाहेति सादेवहूतिर्विष्णुःसर्वोत्तमइतिज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेनबलीयसास्वर्गादेःपुरुषार्थश्रुतिमुग्धबु
द्धिराहित्येनबलिष्ठेनवैराग्येणयुक्तंयदनुष्ठानमखंडध्यानंतस्माज्जातेनब्रह्महेतुनापरब्रह्मप्रसादजननकारणेन ब्रह्महेतिनेतिपाठेब्रह्मवशीकरणायुधेनेत्यर्थः २४ अतएवविशुद्धेनैकत्वसंशयलक्षणदो
षरहितेनाविर्भूतेनज्ञानेनात्मनास्वस्वरूपमनसात्मानंस्वाबिंबभूतंविश्वतोमुखंसर्वज्ञंच स्वतएवस्वानुभूत्यातिरोभूतंदूरतोनिरस्तंमायागुणैःसत्वादिभिःदेहबंधलक्षणंयस्यसतथातं हरिंददर्शेतिशेषः २५
साऽपरोक्षज्ञानोदयानंतरमीदृशीमवस्थांप्रापेत्याह ब्रह्मणीति सायदापरमात्मानमद्राक्षीत्तदात्मानंस्वशरीरंनसस्मारेत्यन्वयः कीदृशीआत्मसंश्रयेस्वाधारेभगवतिषड्गुणपूर्णेब्रह्मणिकालतोदेश

वनंप्रव्रजितेपत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाप्यभून्नष्टेवत्सेगौरिववत्सला २१ तमेवध्यायतीदेवमपत्यंकपिलंहरिम् ॥ बभूवाचिरतोवत्साहानिस्पृहातादृशेगृहे २२ ध्यायतीभगवद्रूपंयदाहध्यानगोचरम् ॥ सुतंप्रसन्नवदनंसमस्तव्यस्तचिंतया २३ भक्तिप्रवाहयोगेनवैराग्येनबलीयसा ॥ युक्तानुष्ठानजातेनज्ञानेनब्रह्महेतुना २४ विशुद्धेनतदात्मानमात्मनाविश्वतोमुखम् ॥ स्वानुभूत्यातिरोभूतमायागुणविशेषणम् २५ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवभावत्वात्क्षीणक्लेशाप्तनिर्वृतिः २६ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ नसस्मारतदात्मानंस्वप्नदृष्टमिवोत्थितः २७ तद्देहोपरतःपोषोप्यकृशश्चाध्यसंभवात् ॥ बभौमलैरवच्छन्नःसधूमइवपावकः २८ स्वांगंतपोयोगमयंमुक्तकेशंगतांबरम् ॥ दैवगुप्तंनबुबुधेवासुदेवंप्रविष्टधीः २९

तोगुणतोव्याप्तेहरावववस्थितमतिरेकाग्रमनावृत्तजीवभावत्वान्मुक्तलिंगशरीराभिमानत्वाद्वीतक्लेशानिरस्तदुःखाप्राप्तनिर्वृतिराप्तपरमानंदा २६ नित्यारूढसमाधित्वान्नित्यंहरावेवसन्निविष्टमनस्क
त्वात्परावृत्तगुणभ्रमापरावृत्तःपराभूतःगुणेषुशब्दादिविषयेषुदुःखसाधनेषुसुखसाधनत्वबुद्धिभ्रमोयस्याःसाकथमिवस्वप्नदृष्टमिवोत्थितःस्वप्नादुत्थितः स्वप्नेदृष्टंयथानस्मरतितथेति नन्विदंनिदर्शनं
विवृत्तजीवभावत्वेकथमुपपद्यते स्वप्नदृशोजीवत्वानिवृत्तेरितीयमाशंका । जीवोपाधिप्रभृतयआमुक्तेःसर्वदेहिनाम् । नियमात्तत्वभावस्तुनिष्फलत्वादुदीर्यतइत्यनेनपरिहरणीया । एतत्स्मृत्यर्थद्योतना
यस्वप्नोत्थितनिदर्शनमितितात्पर्यार्थोज्ञातव्यः २७ इदमपरोक्षज्ञानोदयानंतरंलक्षणमित्याह तद्देहइति परुयदोषोपगतःसवस्याःदेहोबभावित्यन्वयः आध्यसंभवाच्छरीरकार्श्यहेतुमनोदुःखाभावाद
कृशत्वंअकृतइतिपाठेविहितस्नानादिशून्यइत्यर्थः युगेऽक्षपातेपर्याप्तिकृतंकीर्वेहितेर्थवदितियादवः यद्वाअपर्याप्तोसमाप्तप्रारब्धकर्मा २८ शरीराभिमानाभावादाध्यसंभवोनुमीयतइतिभावेनाह स्वांगमिति
गोपुत्रभावात्कथंतद्देहावस्थानमत्राह दैवेति दैवेनहरिणागुप्तंरक्षितं रक्षणेनिमित्तमाह वासुदेवेति २९

श्रवणसुखस्याप्यस्यप्रसंगस्यकदानुसमाप्तिरितिमंदाशंकांपरिहरंस्वदेहस्यप्रारब्धकर्मनिर्वाणेनतस्याः श्रीनारायणप्राप्तिंवक्ति एवंसेति अविरहंसर्वगतंनिर्वाणंप्रकृतिप्राकृतशरीररहितंनिर्वृतंवा हेत्य
नेनेतिहाससमाप्तिंसूचयति ३० पूर्वंशुक्लस्यहरेरश्रुबिंदुनिपाताद्बिंदुसरोनामाभूत् इदानीमस्याःदेवहूत्याःसिद्धपदहेतुत्वात्सिद्धपदमितिनामांतरंवक्ति तद्वीरेति वीरविदुर ३१ तत्रतद्देहोदाहकाभावा
च्छ्वसृगालगोचरत्वेलोकहितैषणक्षेत्रस्तुतिर्व्यर्थास्यादितितत्राह तस्याइति तन्मर्त्यंशरीरंस्रोतसांनदीनांप्रवरासरित् ३२ पूर्वंकपिलगमनस्यकर्मेणोक्तमधुनातत्पूर्वंतद्गमनंवक्ति कपिलोपीति महायोगी
पूर्णज्ञानप्रिागुदीचींदिशंशंकररक्षिताम् ३३ दत्तेअर्हणनिकेतनेपूजानिवासस्थानेयस्मैसतथा ३४ योगंध्यानलक्षणंवाप्राणायामलक्षणंवा सांख्याचार्यैःयथार्थज्ञानोपदेष्टृभिःसनकादिभिः नायं
योमःस्वप्रयोजनोपदेशार्थःकिंतुलोकसुखार्थइत्याह त्रयाणामिति उपशांत्यैमंगलाय ३५ मैत्रेयोविदुरंसंबोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति एतन्निगदितमिति नकेवलंदेवहूत्याएवसिद्धिहेतुः

एवंसाकपिलोक्तेनमार्गेणाविरहंपरम् ॥ आत्मानंब्रह्मनिर्वाणंभगवंतमवापह ३० तद्वीरासीत्पुण्यतमंक्षेत्रंत्रैलोक्यविश्रुतम् ॥ नाम्नासिद्धपदंयत्रसासं
सिद्धिमुपेयुषी ३१ तस्यास्तद्योगविधुतमाशुमर्त्यंमभूत्सरित् ॥ स्रोतसांप्रवरासौम्यसिद्धिदासिद्धसेविता ३२ कपिलोपिमहायोगीभगवान्पितुराश्र
मात् ॥ मातरंसमनुज्ञाप्यप्रागुदीचींदिशंययौ ३३ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानःसमुद्रेणदत्तार्हणनिकेतनः ३४ आस्तेयोगं
समास्थायसांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपिलोकानामुपशांत्यैसमाहितः ३५ मैत्रेयउवाच ॥ एतन्निगदितंतातयत्पृष्टोहंत्वयानघ ॥ कपिलस्यचसं
वादोदेवहूत्याश्चपावनः ३६ यइदमनुशृणोतियोभिधत्तेकपिलमुनेर्मतमात्मयोगगुह्यम् ॥ भगवतिकृतधीःसुपर्णकेतावुपलभतेभगवत्पदारविंदम् ॥
॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेचतुस्त्रिंशोध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

किंतुलोकस्यचेतिचार्थः ३६ श्रोत्रादीनांप्रियप्रवृत्त्यर्थंश्रवणादिफलमाह यइदमिति आत्मयोगगुह्यंपरमात्मप्राप्तिसाधनज्ञानोपायानांमध्येरहस्यं यःसुपर्णकेतौगरुडध्वजेभगवतिकृतधीःश्रवणादि
नेदंमतमभिधत्तेअभ्यस्यति सचभगवत्पदारविंदमुपलभतेऽपरोक्षीकरोतीति ३७ ॥ सुनीलनीरदश्यामंसच्चिदानंदविग्रहं । रमारमणमीशेशंविठ्ठलंसमुपास्महे ॥ १ ॥ पदरत्नावलीनामतृतीयस्कंधप्रका
शिनी ॥ वनमालेवदेवेशतवकंठेविराजताम् ॥ २ ॥ तृतीयस्कंधमारुह्यगिरींद्रमिवगह्वरम् ॥ अवरूढेमयिस्निग्धाःकृपांकुर्वंतुसाधवः ॥ ३ ॥ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थमुनीं
द्रकृतायांश्रीमद्भागवतटीकायांपदरत्नावल्यांतृतीयस्कंधेचतुस्त्रिंशोध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥



SGF
Shri Gurgrahana Digital Foundation

